कामः — प्रिये! (विहस्य) पश्यामि चक्षुषीव ते चेतस्यपि कातर्यं योजयामि खल्वहं योगीश्वरानपि युवतियोगीश्वरपादे ।

रतिः — आर्यपुत्र! अवधारितं मया तव माहात्म्यम् । इदानीं पुनर्दीर्घबुद्धिबलेन दैवदत्तहस्तेन, यमनियमप्रमुखबहुसहाय-सम्पन्नेन अखण्डोत्साहप्रभुत्वमन्त्रशक्तिना शत्रुणा, कदा किं भवेदिति प्रबलपवनाहतकदलिकेव तरलतरास्मि । प्रसिद्धं खलु प्रज्ञाबलं मोक्षपर्यन्तानां अतिदुष्कराणां सिद्धीनां साधनमिति ।

कामः — अयि मुग्धे ! मञ्जुभाषिणि संपश्यतां भवती ।

मयादिष्टः क्रोधः प्रथयति किमप्यान्ध्यमथ च
स्मृतिभ्रंशः सेद्धा विघटयति बुद्धिं सपदि सः ।
तया युक्तः क्षेत्री तमसि गहने विन्दति लयं
तथाभूते किं वा जनयति विवेको जडमतिः ॥

रतिः — सम्भावयामि, सत्यं तव भाषितम् । आब्रह्मकीटमप्रतिहतं खलु तव माहात्म्यम् । एतत्पुनरज्ञातपूर्वमाज्ञापयत्वार्यः ।

कामः — किं तत् ।

रतिः — विवेकप्रभृतीनां महामोहप्रभृतीनां च मृगेन्द्रमातङ्गानामिव किं निमित्तं वैरमिति ।

कामः — प्रिये! आकर्ण्यतामिदमादितः ।

त्रिगुणघटिताद्भोक्तुर्बुद्धिः सती तदनुव्रता
समयनियतोच्छ्रायं वेधा कुलं समजीजनत्
प्रथममिह तद्भोगद्वेष्यं विवेकपुरस्सरं
द्वितयमितरज्जुष्टं रागप्रमोहमुखं मिथः ॥

अत्र विवेकश्च महामोहश्च समानशीलाभिः प्रकृतिभिरभिषिक्तौ राजन्यौ । तयोरपि——

मोहस्य धर्मपत्नी दुर्मतिरपवर्गदोषदृष्टिमयी ।
विषयस्य दोषदृष्टिः सुमतिरनन्या विवेकस्य ॥२१॥

रतिः — ततस्ततः ।

कामः — ततश्च रजःप्रधाना रागादयः तमःप्रसूतेः संसारचक्रवर्तिनो महामोहस्य दैत्यानुकूलरक्षःकुलन्यायेन साचिव्यमाचरन्ति । सत्त्वसम्भवं तु विवेककुलमसहायमल्पसारं च जगति वर्तते । जनश्चास्माकं क्षेत्रज्ञः । स्वयं मध्यस्थस्वभावोऽपि सहधर्मचारिण्या देव्या बुध्या सहाद्य यावद् अस्मासु बहुलं दत्तदृष्टिः । तदिदमसहमाना नित्यनृशंसा विवेकादयः जातिवादिन इव स्वभङ्गमप्यनुमन्यमानाः पुरुषस्य भोगं तत्संवर्धकानस्मांश्च उत्सादयितुमीहन्ते । अस्मत्तातेन च अनादिभुक्तायां प्रकृतौ विविधान् दोषान् उद्घाटय, तातं

च उपजनितवैराग्यं केनचिदुपायेन निरचय्य महाप्रस्थानेन अपुनरावर्तिनं कर्तुमारभन्ते । तथा मर्कटरक्षःपती महापातकिनौ सुग्रीवविभीषणौ स्वकुलोत्सादने प्रमाणयन्ति । न च तदारम्भसममये तातस्य दुर्दशा शक्या वर्णयितुम् । अयं खलु ।

जात्यन्धः परदोषदृष्टिषु परीवादेषु मूकाग्रणीः
बाधिर्यप्रथमावतारसरणिर्निन्दासमाकर्णने ।
स्त्रीप्रायः परदारसंग्रहविधौ तद्वत्परावर्जने
संपद्येत समीक्षणेऽपि विकलः पापैर्विवेकादिभिः ॥

अतएव अस्माभिरपि परित्यक्तसौभ्रात्रैः तेऽपि दुरात्मानो जिघांस्यन्ते । ततः प्रवृत्तिनिवृत्तिपद्धती समाश्रित्य वयं च ते च संयतिष्यामहे । तदा तु सत्त्वप्रधानं कुलं ज्योतिरिङ्गणज्योतिरिव द्युमणिकिरणैरस्माभिरभिभूयते ।

रतिः — शान्तं पापम् । शान्तं पापम् । पुत्राः पितुः भोगं विनाशयन्ति । तथा कथं सोदरा एव इतरेतरविध्वंसनलम्पटहृदया भवन्ति ? नाथ! किं न भवेत्तेषां युष्माकमपि समरदुर्दशानिवारणसाधनं सन्धिः ।

कामः — मुग्धे ! कथमपि नात्र सन्धिः सम्भाव्यते ।

सतः सत्त्वविहीनानां सत्तयैवापराध्यतः ।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥२३

रतिः — किं पुनस्तैः कृतघ्नैः महाबलानां युष्माकमप्युन्मूल
उपायस्संमन्त्रितः ? नाथ किं विवेकस्य नास्ति विवेक
अथवा अमात्यानां शमदमादीनाम् ?

कामः — अयि भीरु ! अनुद्घाटनीयमिदं राजरहस्यं विशेषतः स्त्रीषु ।

रतिः — शापितोऽसि मया प्रियसखेन वसन्तेन च । सल
विव्रियतां राजरहस्यम् ।

कामः — प्रिये ! कथयामि तर्हि । अस्ति किल कैश्चिन्निष्ठुरैरनुष्ठीय-
मानो निवृत्तिसंज्ञको धर्मः । यन्निष्ठस्य पुरुषस्य परदोषदर्श-
नादिषु अन्धबधिरषण्डपङ्गुमूकादिवदत्यंतमत्रसन्नावस्थान-
माकर्ण्यते । तेन निष्प्रतिक्रियेण केनचिदत्रग्रहेणैव पुरुष-
माविशता बुद्धिः सङ्गम्स्यते । तत्सङ्गमाद्भवसागरभैमरथीपर-
भक्त्यपरपर्याया ब्रह्मराक्षसी प्रादुर्भवति । ततश्च —

प्रव्रज्यादियुता परत्र पुरुषे पातिव्रतीं बिभ्रती
भक्तिः सा प्रतिरुद्धसर्वकरणा घोरं तपस्तप्यते ।
तुष्टा येन जनार्दनस्य करुणा कुर्वीत तात्किङ्करं
कश्चित् कैटभकोटिकल्पमसुरं ....... (इत्यर्धोक्ते)

वसन्तः --- (स्वगतम्) स खलु संकल्पसूर्योदयः ।

निर्मूलनस्त्वेष नः

इति शेषः । अन्यथा तु पूरयामि --

शेषं पुनर्दुर्वचम् ॥

रतिः ---- नाथ! परिरक्ष, परिरक्ष ।

कामः --- मा भैषीः, समाश्वसिहि समाश्वसिहि । (नेपथ्ये कलकलः) प्रिये, मोहपरिपन्थिपक्षे मूर्धाभिषिक्तः स्वयमसौ सहधर्मचारिण्या सुमत्या सहाभ्यमित्रीण उपसर्पति । तन्न सांप्रतमस्माभिरवाप्तसमयैरसहायैश्चारातिसन्निधौ आत्मानं प्रकाशयितुम् ।

(एहि गच्छावः)

## दृश्यम् ३

(ततः प्रविशति राजा विवेकः सुमतिश्च)

विवेकः — प्रिये! समाकर्णितः त्वया कन्दर्पवटोराटोपः । यदसावशेषपापनिष्कृतौ प्रवर्तमानानस्मानेव पापारोपेण परिवदति अथवा—

**पश्यति परेषु दोषानसतोपि जनः सतोपि नैव गुणान् ।**
**विपरीतमिदं स्वस्मिन् महिमा मोहाञ्जनस्यैषः ॥२५॥**

सुमतिः — आर्यपुत्र! विरूपाः खलु जना निजमुखे दोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ति ।

विवेकः — सत्यमेतत् यथार्थदर्शिनी यथादृष्टार्थवादिनी च भवती। प्रिये! पश्य। निर्विकारपुरुषपीडया क्रीडन्त एते कामक्रोधलोभादयः ।

सुमतिः — आर्यपुत्र! कथं सः नित्यनिर्मलमहानन्दस्वयंप्रभः सर्वजनदर्शनयोग्यस्वभावः पुरुषः महामोहेन मानमदमत्सरप्रमुखैः दुर्विनीतैः दुःखसागरे निक्षिप्तः ?

विवेकः — श्रूयताम्—

**स्वतः प्राप्तं रूपं यदिह किल भावेषु तदपि**
**त्यजन्तस्ते दृष्टा नियतिघटितोपाधिवशतः ।**

प्रकृत्या तिष्ठन्ति ह्युपधिविगमे ते च तद्दसा-
वनादिः संसारः पुरुषमुपरुन्धे गलति च ॥२६॥

वयं पुनः तमेव पुरुषं निश्रेयसे योजयितुं समस्तजन-
सांसिद्धिकसुहृदो भगवतः दयादृष्टिमावहन्तः प्रवृत्ताः;
पश्य! त्वया सह निर्वर्तनीयं परानुग्रहव्रतम्।

सुमतिः — अद्य खलु देवानां मुनीनामपि परावरपुरुषवेदने डोलायते
चिन्ता, त्वया पुनः कथमेकस्मिन् पुरुषोत्तमे निष्ठा
नियम्यते?

विवेकः — प्रिये! सूक्ष्मदर्शिनि! पश्यतु भवती----

शास्त्राण्यालोड्य सर्वाण्यशिथिलगतिभिर्युक्तिवर्गैर्विचार्य
स्वान्तर्निर्धार्य तत्त्वं स्वभुजमपि महत्युद्धरन् सूरिसङ्घे।
सत्यं सत्यं च सत्यं पुनरपि कथयन् सादरं वेदवादी
पाराशर्यः प्रमाणं यदि क इह परः केशवादाविरस्ति॥

महाजनो येन गतस्स पन्थाः इति महर्षिभाषितम्।

सुमतिः — अनुत्तरमेतदुत्तरम्।

विवेकः — साधु चिन्तितं तदिदं संदर्शयामि।

परः पद्माकान्तः प्रणिपतनमस्मिन् हिततमं
शुभस्तत्सङ्कल्पश्चुलकयति संसारजलधिम् ।
झटित्येवं प्रज्ञामुपजनयता केनचिदसौ
अविद्यावेतालीमतिपतति मन्त्रेण पुरुषः ॥२८॥

## दृश्यम् ४

(ततः प्रविशति रागः)

रागः — सखे! त्वत्सहायस्य मे स्वामिकार्यनिर्वर्तनं सिद्धप्रायमिति निश्चिनोमि।

द्वेषः — वयस्य! त्वद्विरुद्धविवेकसंरम्भानुरोधेन त्वदेककार्य एव ह्यादिष्टोऽस्मि महाराजेन।

रागः — सखे! सम्भवन्ति च सर्वथा सर्वतः प्रसारिताभ्यां स्वर्गापवर्ग गुणदोषजालाभ्यां तयोरुपरोधः, अहं पुनः मायासहस्रवेदी मारीचमैथिलीन्यायेन विरक्तिं तावत्तपस्विनीं विप्रलभे, भवतस्तु विष्णुभक्तिमथने पौलस्त्य एव प्रमाणम्।

द्वेषः — अथ किं?

सर्वाधारः कथं नु स्यात्सर्वदोषविवर्जितः
तथैव सर्वकामार्थी निरपेक्षः कथं प्रभुः ॥२९॥

रागः —

अल्पमस्थिरमानन्दमिच्छतो यदि रागिता।
अनन्तस्थिरकामस्य विरक्तिः कस्य कीदृशी ॥३०॥

(उभौ कर्णं दत्वा ससम्भ्रमम्)

उभौ — आः कष्टमापतितम्।

अतिक्रम्य दुरच्छेदामास्माकीं गुणवागुराम् ।
विरक्तिर्विष्णुभक्तिश्च विवेकस्थानमृच्छतः ॥३१

सचैषो नूनं विरक्तिविष्णुभक्तिभ्यां प्रोत्साहितः देव्या सुमत
दत्तहस्तः इतो अभिसमेति, जितकाशिनश्च अमुष्य सन्निधा
नास्माभिः स्थातव्यम् । "जीवन्तो हि भद्राणि पश्यन्ति ।"

(इति निष्क्रान्तौ)

## दृश्यम् ५

(ततः प्रविशति विवेको सुमतिश्च)

विवेकः — देवि ! समाश्वसिहि समाश्वसिहि । परप्रयुक्तपाटच्चर-भयापनोदनेन विरक्तिविष्णुभक्ती त्वत्सकाशं प्रापिते ।

सुमतिः — नाथ ! तथापि अद्यापि किं भवेदिति तरलहृदया किं भणामि ? प्रच्छन्नवैरिणौ खलु रागद्वेषौ अवसरं प्रतीक्षेते ।

विवेकः — भीरु ! मातेऽभूदिह मनोदौर्बल्यम् ।

अनुचितपदवीभिश्चिन्तयित्वा प्रयातान्
अलमलमतिमात्रैरद्य बाले विषादैः ।
उपनिषदमुदारामुद्वमन्क्वापि लक्ष्ये
शरणमुपगतान्नस्त्रायते शार्ङ्गधन्वा ॥३२॥

सुमतिः —

सर्गेषु प्रतिसञ्चरेषु बहुषु स्वर्गे तथा दुर्गतौ
जाग्रत्स्वप्नसुषुप्तिमुग्धमरणावस्थासु दुःस्थासु च ।
दुःख्यन्प्रस्तरवद्भवन्बहुपशुः सुख्यन्नसौ देहभृत्
दग्धादग्धसजीवितद्रुमदशा दीनो दरीदृश्यते ॥३३॥

विवेकः — सत्यमिदमितः पूर्वमासीत् इदानीं पुनः—

बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगं पुरुषम् ।
अभिसरति नित्यसत्वा सत्वरमपवर्गसाधनी विद्या

सुमतिः — युक्तमेतत्, तथापि प्रत्यक्षितपरमार्थं त्वामेव पृच्छामि
केन पुनर्विनिपातेन निर्मलगुरुसकाशनिर्धारितनिगमा
र्हृदयानामप्रमादपरिगृहीतनिवृत्तिधर्माणामसंभावितप्रत्यूहा
मपि महापुरुषाणां मोक्षोपायः शीघ्रं न सम्पद्यते ।

विवेकः — प्रिये ! आकर्ण्यतामेतदवहितया भक्त्या—

तिमिं किल तिमिङ्गिलो गिलति तद्गिलस्तं तथा
तमप्यथ च तद्गिलस्तदिह पश्य कर्मक्रमे ।
समस्तवृजिनोदधिग्रसनडम्भकुम्भोद्भवम्
निवृत्तिमपि धर्ममत्त्यनघतत्त्वविन्निग्रहः ॥३५

अन्यदपि एतादृशं अवधारयेथाः—

प्रथितं पातकिवर्गं कृतघ्नमेकोपि कृत्स्नमतिशेते ।
तमिमं क्रियमाणघ्नस्तमपि दुरात्मा करिष्यमाणघ्नः ॥३६

सुमतिः — इति नाम निस्समाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजननिग्रहस्य
प्रभावो दर्शितः अस्य पुनर्नाथ! नास्ति परिहारः ?

विवेकः — अस्ति कश्चिदेकः । यदिह पुनस्तत्प्रसादनम् । तेन—

परभक्तिरप्रकम्प्या निवृत्तिधर्मानुबन्धिगुणबन्धैः ।
भवजलधिपोतपात्री जाता वृद्धिं दिने दिने भजति ॥

---

## दृश्यम् ६

(नेपथ्ये वैतालिकौ)

कामः —

इक्षुः पेशलमीदृशं मम धनुः पुष्पाण्यमी सायकाः
तन्त्रीमञ्जुलनिःस्वना मधुकरश्रेणी शुभा शिञ्जिनी ।
भीरुस्सन्नबलाजनो मम बलं तथ्यं परं कथ्यते
सोऽहं निर्जितशूलभृत्प्रभृतिकः सङ्कल्पसिद्धोदयः ॥३८॥

सखे !

त्वयि संभृतशस्त्रास्त्रे सहाये मयि संस्थिते ।
महता पश्य मोहेन विश्वमेकातपत्रितम् ॥३९॥

वसन्तः — किमुच्यते ! कामः खल्वसि ।

(ततः प्रविशति क्रोधः)

क्रोधः — स्वस्ति सुहृदे ! स्वैरसंचारविजितविवेकविभवाय कुसुमधन्वने

अयमहमुद्भटप्रथनचारभटारभटी
नटपतिरुत्थितः कथमुदेतु विवेककथा ।
यदनुविधायिदैत्यभयसंज्वरितासु मुधा
सुरसुभटीपयोधरतटीषु पटीररसः ॥४०॥

वसन्तः — सखे ! इदमप्यत्रधारणीयं भवद्भ्याम् ।

श्रृणोति कथयत्यसौ परिचिनोति संपृच्छते
समर्चयति गायति स्पृशति पश्यति स्तौति च ।
इतीव नियतादरो मुरभिदंघ्रिसेवारसो
न भेत्तुमिह शक्यते स्थिरविवेकदुर्गस्थितः ॥

सखे! शंबरासुरसूदन! श्रोतव्यमेतत्सुरभिणा सुहृदा च कामेन ।

जमदग्निमुखान् परित्यजन् परिगृह्णन् दशकन्धरादिकान्
विनिपातितवानुपायतः पुरुषानद्भुतपौरुषानहम् ॥४२॥

वसन्तः — विश्वहृल्लोभनो लोभ इह आकार्यः ।

क्रोधः — सखे! पश्य,

विजेतुकामः कामं त्वां निष्काम इति का कथा
त्वन्निवर्तननिष्कामः सकामस्त्वय्यनुज्झिते ॥४३॥

कामक्रोधौ – सुष्ठु चिन्तितं सुहृदा ।

(ततः प्रविशति लोभः तृष्णया सह)

लोभः — प्रिये ! तृष्णे !

अशेषसुरनारीणामाभिरूप्यसमुच्चयैः ।
अजहद्यौव्वनां तृष्णे विदधे त्वां विधिः स्वयम् ॥

तदहं निदर्शयामि ।

कनककलधौतशैलप्रभृतिरपि हन्त! पूरणे क्षिप्तैः ।
तृष्णे भजति समृद्धिं भूयो भूयस्तवोदरे कार्श्यम् ॥

इदानीं त्र्यम्बकसखस्य तव तावत् धनदबिरुदाङ्कितस्य मत्कृतामवस्थामाकर्णय—

लब्धं न मुञ्चति विलक्षमतिर्न भुङ्क्ते
धत्ते पुनः पुनरसौ महतीं धनायाम् ।
निद्रारसं न लभते महतां निधीनां
रक्षापिशाच इव संप्रति राजराजः ॥४५॥

कामक्रोधौ -- दीर्घायुषौ भूयास्ताम् ।

लोभः — वयस्यौ ! युष्मदवष्टम्भेन सर्वत्र अमोघप्रवृत्तिरस्मि । सुयोधनादिवत् मत्परिगृहीतस्य लोकस्य इदानीमद्वितीयां द्वितीयपुरुषार्थनिष्ठां निवेदयामि ।

क्षुद्रक्षोणिरजःकणास्थिरजुषः क्षुभ्यन्ति पृथ्वीभृतः
तप्येत स्वपदाय कः क्वचिदिति त्रस्यन्त्यमर्त्येश्वराः ।

भिक्षाकेष्वपि केषुचित् क्वचिदुपक्षिप्तेष्वाधिक्षेपतः
पक्षे दुर्मतिभृत्ययोरिह जगत्तिष्ठत्यसूयेर्ष्ययोः ॥४६॥

अपि च—

अटान्ति हरितो दश स्थपुटयन्ति विश्वम्भरां
पठन्ति धनिनां चटून्परपरिच्छदं बिभ्रति ।
तरन्ति जलधिं प्लवैः समरमारभन्ते मुधा
दुरन्तधनदोहलग्रहिळचेतसो देहिनः ॥४७॥

कामः — समयोचितं समर्थ्यते कालानुवृत्तवेदिना लोभेन । तद्वय-मिदानीं विवेकविजयाय भिन्नदिक्काः प्रतिष्ठेमहि ।

---

## दृश्यम् ७

(ततः प्रविशति काञ्चुकीयः)

काञ्चुकीयः —

मनोरथरथारूढो विवेकस्तर्कसारथिः ।
दिदृक्षुः संयमस्थानमितस्समभिवर्तते ॥४८॥

विवेकः — अहो! दुर्विलसितं महामोहस्य ?

विटविदूषकगायकवैशिकैः विषमितेव विभाति वसुन्धरा।
क नु निवेशमुपेत्य परं पदं विमृशता भवितव्यमिह क्षणम्

अपि च, अत्र कतिचिदाधिगतकुसीदवृत्तयः कृच्छ्रलब्धध
मुदितकृपणतरमानसाः कीकटाः पुरुषाः ।

न धर्ममनुवर्तन्ते न कामं नापुनर्भवम् ।
अर्थमेकमुपाश्रित्य दुःखमेवोपभुञ्जते ॥५०॥

अये! सूत आहार्यहेतुमुखेनापि अन्ततः सूनृतवादिन
निष्प्रतिघवृत्तिना नियमभूयिष्ठेन त्वयासौ मे मनःपू
रथः सुपथा सञ्चरते ।

तर्कः — देव! अहमपि त्वदायत्तप्रसरः ।

विवेकः — वयं खलु सूत ! इदानीं वशीकृतसर्वेन्द्रियस्य पुरुषस्य धारणादिसिद्धिसाधनस्थानमन्वेषयन्तः मेरुशिखरमधिरूढाः (परितः विलोक्य) अये ! तिष्ठ तिष्ठ यावदनङ्गविजयिनो भवानीपतेरावासः कलधौतगिरिरवलोक्यते ।

विजितमनोभवेन विभुनाधिगतोऽपि सदा
निरुपधिसंयमस्य न पदं कलधौतगिरिः ।
गजमुखगण्डशैलघनदानकलिन्दसुता-
लहरिझलंझलाबहलकज्जलकंबलितः ॥५१॥

तर्कः — देव ! पश्य गन्धर्वयूथसेवितं गन्धमादनम् ।

विवेकः — अयमपि सिद्धैरासेव्यमानो न साधकानामावासः । सारथे ! अन्यतो रथं वाहय । (विचिन्त्य) इह हि लोकः—

प्रलपति घूर्णते स्खलति मुह्यति हुंकुरुते
न च पदवीमुपैति न च धाम न च त्रपते ।
विकृतिशतप्रसूतिविषमाशयदोषभुवा
धनमदिरामदेनधमतीव धरावलयम् ॥५२॥

तर्कः — इतस्तर्हि दिव्यतपोवने दीयतां दृष्टिः देवेन ।

विवेकः — विजिताक्षतया विज्ञातस्यापि अमुष्य सर्वोत्तरे तपोवने संयम सिद्धिं न श्रद्दधे । इह च—

परिणमति जनानां संविदानन्दरूपा
निखिलमपि विहाय स्निह्यतीवान्तरङ्गम् ।
स्वरपरिणतिचित्रां मूर्च्छनां भूषयद्भिः
श्रुतिसुरभिततन्त्रीझंकृतैः स्वैरगीतैः ॥

अशक्यश्च सन्निधौ परित्यागः संयमारम्भविरोधिनां विषयाणाम् ।

सा काशीति न चाकशीति भुवि सायोध्येति नाध्यास्यते
सावन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति ।
धत्ते सा मधुरेति नोत्तमधुरां मान्यापि नान्या पुरी
या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे ॥५४॥

स्मर्यते च मुनिभिः—

निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ।
तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्कराणि च ॥५५॥

संभवन्ति च सर्वत्र श्रेयसामन्तरायाः । शमितव्याश्च

ते सर्वनिर्वोढारमेकमेव शरणमुपगच्छद्भिः ।

अपि च स्वयमेवाह भगवान्—

"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।" इति

किं च—

पुरुषस्य पुराणस्य पुंसश्च शरणार्थिनः ।
अपृथक्सिद्धयोरेकमदूष्यं स्थानमान्तरम् ॥५६॥

इदमपि सारथे मन्त्रीथाः—

शुद्धाचारतपोवनैकनिरतः प्रज्ञानशैलाश्रयः
पद्माकान्तपदस्पृहासुरनदीनित्याभिषेकोज्वलः ।
अध्यात्मश्रुतिचिन्तनेन तपसा निर्धूतदोषः पुमान्
कस्मै कुत्र गमिष्यति स्थितमिदं कस्मै च निर्देक्ष्यति

तद्वयं शुभाश्रयनिर्धारणेन धारणादिकक्ष्यासु विशदतमां वृत्तिं पुरुषस्य विभावयामः ।

## दृश्यम् ८

(ततः प्रविशति दम्भः)

दम्भः — अहह! रे त्वां धर्मपत्नि कुहने! सम्बोधयामि। त्वं हि मे तारेव बृहस्पतेः अहल्येव गौतमस्यास्पृष्टपुरुषान्तरा क्षणविरहाक्षमा सहधर्मचारिणी।

कुहना — यद्ब्राह्मणेश्वरो भणति। तथापि लज्जामि निर्दिष्टाग्नि-दर्शनात्। अरुन्धतीव वसिष्ठस्येति वचनीयं गृहस्वामिना। यदाहं तस्करैः कितवैः ग्रामणीभिः नरेन्द्रामात्यैः पाषण्डिभिः अन्यैरपि तादृशैः प्रार्थिताऽस्मि, तथापि तान् सर्वानपि त्वामेव स्मृत्वा सेवे।

दम्भः — साधु कुहने! साधु (निमित्तं निरूप्य) स्पन्दते दक्षिणं चक्षुर्मम। अद्यैव सुहृत्समागमः संपत्स्यते।

(ततः प्रविशति दर्पः)

दर्पः — अहं किल राज्ञा महामोहेन प्रकृष्टजनतिरस्काराय प्रणिहितः, मम प्रभावेण लोके इदानीं,

संस्काराः परमुत्सवैकवपुषः सन्ध्या विनोदावधिः
सावित्री जनबाधजर्जरतनुः शौचं नटप्रायिकम्।

इत्थं मोहमहीपतेरभिमते विश्वं विपर्यस्यतः
कालस्यैष कलेरपेक्षितमत व्यक्तक्रमः प्रक्रमः ॥५९॥

किंच

भिक्षेति शिष्यकुलरक्षणदक्षिणेति
शाटीति शाश्वतमठोपधिकल्पनेति ।
ग्रन्थोपसंग्रहणमूल्यमिति ब्रुवाणाः
सन्यासिनोऽपि दधते महतीं धनायाम् ॥६०॥

---

## दृश्यम् ९

(ततः प्रविशति संस्कारः)

संस्कारः — अहं खलु अनुभवामुष्यायणः संस्कारनामा देवस्य विवेकस्य शिक्षितसकलविद्यः शिल्पी ।

विदुषश्चिन्तनाशक्त्या चित्रभित्तिं वितन्वता ।
शुद्धाशुद्धविभागार्हं विश्वं विलिखितं मया ॥६१॥

(सर्वतो अवलोक्य) अहह ! सहस्रेष्वपि शिल्पकर्मसु किंचिदेव कदाचिदतिशेते । इह च—

कः कोऽत्र भोः (श्रुत्वा सहर्षं) किमासीदति शिल्पशालां व्यवसायदत्तहस्तः सुमतिसहायो विवेकः ? तदहं यथोचितपरिजनकल्पे वर्तिष्ये ।

व्यवसायः—इत इतो देवः इयं सा बहिरन्तश्चलंवितामन्दमकरन्दपरिमळमन्दारदामचित्रिता चित्रशाला ।
यत्र च परस्परप्रतिफलनादलिखितापि भित्तिः लिखितेव अवभासते । आलोकयतु देवो देवी च । इह हि—

ईक्षणध्यानसंस्पर्शप्रमुखैः पोषयन् प्रजाः ।
मत्स्यकूर्मविहंगादिविग्रहः प्रेक्ष्यते विभुः ॥६२॥

विवेकः — अत्र किल विश्वतश्चित्ते विश्वचित्ते ।

अशुद्धसृष्टिविषयं भागं भवभृदाश्रयम् ।
अधिकप्रतिकोटिस्थं दृष्टिस्तव दिदृक्षते ॥६३॥

सुमतिः — मानुषस्य योगिनः मानुषसदृशे चित्तसंगः सम्पादनीयः । आर्यपुत्र ! किंनाम परमपुरुषस्य एतादृशानि रूपान्तराण्यपि भवन्ति ।

व्यवसायः—भवन्त्येव, तेषु एतदवलोक्यताम् ।

विवेकः — उभयोः विभूतिभूतं उभयविधं जगत् इत्युक्तं भवति ।

व्यवसायः—एवमेतत्, इतश्च दीयतां दृष्टिः देवेन । अत्र च----

परव्यूहव्यूहान्तरपदविभक्तेषु बहुषु
त्रिधाम्नो रूपेषु स्थितिमनधिगम्यापि मनसः ।
अवैजात्यं वृन्दारकनरतिरश्चामभिनय-
त्यमुष्मिन् दृष्टिस्ते भवतु विभवव्यक्तिविभवे ॥

व्यवसायः—अमी च भृगुरघुयदुवंशसम्भवाः प्रबलतरदुष्टनिरसनेन परित्रातलोकत्रयास्त्रयो रामाः । एष पुनरेतेषु बहुमुखपुण्यजनबाधनोऽपि परित्रातपुण्यजनो मध्यमो रामः । अनेन किल कोसलसुता कुमारभावकञ्चुकितकारणाकारेण, कौमारकेलिगोपायितकौशिकाध्वरेण, रणाध्वरधुर्यभव्यास्त्रशालिना,

प्रणतजनविमतविमथनदुर्ललितदोर्ललितेन, मैथिलनगर-
सुलोचनालोचनचकोरचन्द्रेण, दिनकरकुलकमलदिवाकरेण
खण्डपरशुकोदण्डप्रकाण्डखण्डनशौण्डभुजदण्डेन, भृगुपति-
सुगतिविहतिकरनतपरुरिषुपरिघेण, पितृवचनपरिपालनप्रति-
ज्ञावज्ञातयौवराज्येन, दण्डकतपोवनजङ्गमपारिजातेन, खरतर-
खरतरुषण्डखण्डनचण्डपवनेन, द्विसप्तरक्षस्सहस्रनलवन-
विलोलनमहाकलभेन, महितमहागृध्रदर्शनमुदितमैथिलीदृढ-
परिरम्भणविरोपितविकटवीरव्रणेन, मारीचमायामृगचर्मपरि-
कर्मितनिर्भरदर्भास्तरणेन, गृध्रराजदेहदिधक्षालक्षितभक्तजन-
दाक्षिण्येन, अवन्ध्यमुनिजनभजनमुषितहृदयकलुषशबरी-
मोक्षसाक्षीभूतेन, प्रभञ्जनतनयभावुकभाषितरञ्जितहृदयेन,
तरणिसुतशरणागतिपरतन्त्रितस्वातन्त्र्येण, विपुलभुजमूल-
निबिडनिपीडितरावणरणरणकजनकचतुरुदधि विहरणचतुर-
कपिपतिहृदयविशालशिलातलदारण दा रु ण शि ली मु खे न,
विमतसहोदररक्षःपरिग्रहसंरम्भविजृम्भितसर्वेश्वरभावेन, सकृ-
त्प्रपन्नसंरक्षणदीक्षितसत्यव्रतेन, कपिकुलकरतलतुलितगिरि-
निकरसाधितसेतुपथसीमासीमन्तितसमुद्रेण, लङ्कावरोधवेपथु-
लास्यलीलोपदेशदेशिकेन, विशङ्कटविशिखविताडनविघटित-
मकुटविह्वलविश्रवस्तनयविश्रमस म य वि श्रा ण न वि ख्या त-
विक्रमेण, कुम्भकर्णकुलगिरिदलनदम्भोलिना, मघवजिदभि-
हननकृदनुजसाक्षिकराक्षसद्वन्द्वयुद्धेन निखिलजगदनवरत-

भयजनकदशलपनलपनदशकलत्रनजनितकदनदलितरजनिचरयुवतिजनविलपनवचनविख्यापितपारम्येण, विभीषणवशंवदीकृतलङ्केश्वर्येण, पुष्पकरभसगोष्पदीकृतगगनमहार्णवेन, प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसिंहासनाधिरूढेन, दिव्यभौमायोध्याधिदैवतेन, जानकीसहधर्मचारिणा, सर्वधर्मसमाराधनीयेन, सनातनधर्मेण, साकेतजनपदजनिधनिकजङ्गमेतरजन्तुजातदिव्यगतिदानदर्शितनित्यनिस्सीमवैभवेन भगवता, भक्तजनाभिरामेण, श्रीरामेण, विश्वमेतत्सनाथीकृतम्—

विवेकः —

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्किवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥
विशुद्धे विश्वरूपस्य यत्र क्वचन विग्रहे ।
समाधिजननीं पुंसः साधयिष्यामि भावनाम् ॥६५॥

## दृश्यम् १०

(ततः प्रविशति महामोहः)

महामोहः—(विचिन्त्य) प्रिय! मया महासाहसिकस्य कुलघ्नस्य विवेकस्य विध्वंसने, कृतप्रतिज्ञेन समाधिसाकांक्षपुरुषसंक्षोभणाय कामक्रोधलोभदर्पदम्भादयः प्रेषिताः ।

दुर्मतिः — आर्यपुत्र! पूर्वमेव ते तत्समीपं गताः ।

दम्भादयः—वयममी आगताः ।

मोहः — स्वागतं भवद्भ्यः ।

दम्भः — महाराज, त्वत्प्रसादात् सर्वत्र अप्रतिहतगतयः समागताः स्मः । किं कर्तव्यमनेन किंकरजनेन ?

मोहः — कामादीनां का वार्ता इदानीम् ?

दम्भः — (स्वगतम्) किं राज्ञे विज्ञापयामि ? (प्रकाशं) "सत्यं राजसु शोभते" इति प्रियेतरदपि दृष्टं ब्रवीमि—

अनन्तविषयस्पृहा जलधिसंप्लुते मानसे ।
वसन्तसमये स्थिते मलयमारुते जीवति ।
सकृद्धिततसौप्तिकप्रतिनिवृत्तिवैलक्ष्यतः
प्रसुप्त इव हन्त! न स्पृशति पञ्चबाणः शरान् ॥६६॥

अन्यस्मिन्नपि कैमुत्यसिद्धमावेदयामि ।

पुरुषस्य विवेकविप्रलम्भात् स्वशरीरेऽपि विरज्यमानबुद्धेः ।
कृपणप्रतिनन्दनीयवृत्तिः किमिवालम्बनमाश्रयेत लोभः ॥

दर्पः — देव! अहं पुनः क्रोधस्य साम्प्रतिकीमवस्थां निवेदयामि ।

द्विसप्तदलपत्तलद्रुहिणसृष्टिभङ्गक्रिया
पुरस्कृतयुगक्षयभ्रूकुटिताण्डवाडम्बरः ।
विरक्तिविषवल्लरीव्यतिकरेण रोषः स्वयं
प्रसुप्त इव वर्तते सुभटकेळिसौवस्तिकः ॥

मोहः —

धिग्ब्रह्माण्डकरण्डगह्वरकुटीकर्पूरपूरं यशः
धिग् ब्रह्मत्रिदशेन्द्रफालफलकस्पष्टोपमृष्टं पदम्
धिग् दोर्विक्रमसद्भुतं मम पुनर्धिग्वादमेवास्तु
धिक् सोढा वैरिकथामपि स्वयमहं नीचाय मह्यं नमः

अहो! विवेकस्य कुलघातिनो दुर्मन्त्रितमेतत् ।

कामस्ताम्यतु कोपलोभसहितः काले समभ्येतु वा
रक्षः संयति राघवास्थितिमहं व्यङ्क्ता विवेकाहवे
कालस्यैष रथोभवत्विह कलिस्त्वं सारथिर्दुर्मते
दम्भः सम्प्रति जैत्रदुन्दुभिरसौ दर्पस्तथा कंकटः

दम्भः — महाराज ! स्वायत्तसिद्धेस्तव किमायत्तमस्मासु ।

मोहः —

दम्भत्वमद्य नियतो निजधर्मगुप्त्यै
पुण्यापगा परिसरान्पुनराश्रयेथाः ।
गाढोपलक्षितविरक्तिमदेषु दर्पः
तन्वीत वासमनघेषु तपोवनेषु ।

दुर्मतिः — आर्यपुत्र ! एवं मे राजकार्यं प्रतिभाति । संधिव्यपदेशे न अस्मत्सकाशमासाद्यतां विवेकः । तत्सजीवग्राहं गृहीत्वा दृढपीडनीयो भवेत् ।

मोहः — (सोच्चैर्हासम्) मुग्धे ! स्वप्नेप्येवंविधं कातर्यवचनं मा वोचः। नन्वहं महामोहः! किमिदानीं मामन्यमिव अभिमन्यसे। प्रिये श्रुणु च एतन्महामोहस्य वीरव्रतम् ।

क्रकचैः कृत्तदेहोऽपि दीपितोऽपि दवाग्निना ।
न सूच्यग्रं प्रदास्यामि न संधास्यामि केनचित् ॥

## दृश्यम् ११

(ततः प्रविशति अभिनिवेशः)

अभिनिवेशः—

हृष्यन्ति व्यसनेषु सप्तसु मुधारम्भेषु मत्प्रेक्षिताः
प्रारब्धं न परित्यजन्ति च मुहुः प्रत्यूहवात्याहताः।
नानादुःखभयानकेऽपि न जहत्यर्थे पुमर्थे रतिं
मोहस्याभिनिवेश एकदृगहं कोशाधिकारे स्थितः॥

अपि च लोभोऽपि महामोहसर्वस्वभूतो मामेव दर्शित सौभ्रात्रं सहायीकृत्य सर्वत्र विजयते। अहो! महत्सांपरायिकमुपस्थितमास्माकस्यान्ववायस्य यदिह विवेकेन प्रथममध्यात्मविद्यामशिक्षि पुरुषः। तथा च सपरिकरे मोक्षोपाये संमुखीकृतः। विमुखीकृताश्च कामक्रोधादयः। विमृष्टं च किमपि संयमस्थानम्। अत्रधारितं च धारणायाः शुभमालम्बनम्। आरिप्सितश्च शमदमवैराग्यादिपरिकर्मितः सालम्बनो महायोगः। (दीर्घं निश्वस्य)

विजिग्ये यैरिदं स्त्रीभिर्विजिताभिर्जगत्त्रयम्।
त एव सुभटाः ख्याताः स्त्रीभिरेव जिगीषिताः॥

(नेपथ्ये) अलीकमेव भणति भावः ।

कासौ रण्डा ? मामप्यलीकवादिनं मन्यते ।

दुर्वासना—एतेनापि तव अलीकभाषितं प्रतिष्ठापितं; त्वयि जीवति अहं रण्डा किल ?

अभिनिवेशः--किमस्मद्गेहिनी ? शान्तं पापम् । प्रिये !

दुर्वा — आर्यपुत्र ! इयमस्मि । के पुरुषाः ? काभिर्जिगीषिताः ?

अभि — श्रूयतां, कामो जुगुप्सया, कोपः तितिक्षया, लोभः तुष्टया, अहंकारः आत्मविद्यया एवमन्येऽपि ।

दुर्वा — किमुत्साहमात्रेण कार्यं संघटते । हताशाः खल्वेताः शलभ्य इव आत्मविनाशे स्वयं प्रवृत्ताः ।

अभि — शलभीनिपाते प्रदीपोऽपि कदाचिद्विनाशमधिगच्छति । (कर्णं दत्वा) किं देवो महामोहः स्वयमेव समराय सन्नह्यति प्रिये ! महदत्याहितम्,

अमुष्मिन्दिवसे श्वो वा नूनं नियतिवैभवात् ।
अमोहमविवेकं वा जगदेतद्भविष्यति ॥

तदस्माकं अवधानस्य प्रधानसमयः ।

## दृश्यम् १२

(ततः प्रविशति विवेकः)

विवेकः — सेनापते! अद्य खलु मया त्वत्पुरस्कारेण निर्जितः सर्वदोषप्रसूतिः महद्भिरपि दुर्जयो महामोहः।

व्यवसायः—देव! वयं हि भवतो वाहनादिवत् उपकरणमात्रं, प्राधान्यं तु सर्वत्र भवत एव।

विवेकः — स्वयंप्रवृत्तस्वतन्त्रकल्पे किं परतन्त्रानस्मान् प्रशंससि ?

यथाधिकरणं प्रभुः यजनदानहोमार्चना
भरन्यसनभावनाप्रभृतिभिः समाराधितः।
फलं दिशति देहिनामिति हि सम्प्रदायस्थितिः
श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः॥

व्यवसायः—विक्रमादपि गरीयांस्तत्रासौ विनयगरिमा। इह पुनरिदानीं विश्वविख्यातवीरायितस्य ते विभूतिसमुचितं किमपि मङ्गलमाचरणीयम्।

विवेकः — सेनापते! मैवं वादीः। अनिष्पन्नसमाधौ पुरुषे कथमहमभिषेक्तव्यः ? प्रक्रान्तमात्रा खल्विदानीं परब्रह्मोपलब्धिः परिनिष्पत्तिस्तु दुर्लभेति परिपश्यामि। तथाहि—

कथमद्य निरालम्बं कर्मशृङ्खलितः पुमान् ।
आरोहतु दुरारोहं समाधिगगनस्थलम् ॥

व्यवसायः—देव! पुरुषः खल्विदानीं स्वशरीरे स्वात्मबुद्धिं विहाय स्वात्मनि परशरीरत्वबुद्धिमनुरुन्धे ।

विवेकः — हन्त! सिद्धप्रायमपि सर्वं सान्तःशल्यमिव अद्य संदृश्यते।

व्यवसायः—महाराज! किमिह पुनः प्रत्यूहशङ्कया ?

विवेकः — सेनापते! सिद्धमपि सर्वं साध्यशेषावमर्शेन असत्कल्पमिवाभाति । अद्य हि---

अपि निर्मुक्तजीवानां कामादीनां बलीयसाम् ।
अविद्या कर्मसंज्ञा तु मृतसञ्जीविनी स्थिता ॥

व्यवसायः—महाराज! त्वत्प्रसादादेषापि न स्थास्यति ।

विवेकः —

अहितनिवहवन्या हन्त सन्तन्यमाना
कथमियमपचेतुं कल्पकोट्यापि शक्या ।

व्यवसायः—इत्थमेव ।

दहति निरवशेषं देव! संभूतिरेनां
युगपदिह समिद्धो योगकल्पान्तवह्निः ॥

अपि च—

मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तबद्धसौ
स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः।
परित्यागे सद्यः स्वपरविविधानर्थजननात्
अलङ्घ्यामामोक्षादनुसरति शास्त्रीयसरणिम् ॥

विवेकः — सेनापते! सम्प्रधारयतापि त्वदुक्तं त्वराधिक्यात् प्रचलितेनेव मया नानुभूयते। यावदिह पुरुषस्य निश्श्रेयसोपायमविकलं न निष्पादयामि, यावद्वा प्रियाऽप्रियेषु सुकृतदुष्कृते न संक्रमयाम्मि, न तावन्निद्रामाद्रिये। अद्य तु—

कामातङ्कमतीत्य कोपदहनं निर्वाप्य वित्तस्पृहा-
वेतालीं व्यवधूय बान्धवकथागर्तं समुत्तीर्य च।
सङ्गोत्तंसितवासनासहचरः संसारकाराकुटी-
निष्क्रान्तिक्रमपादुकातनुमनुद्विग्नो मुनिः क्षाम्यति ॥

व्यवसायः—मैवमाशङ्कथाः----

स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले
कालं कंचिज्जगति विधिना केनचित् स्थाप्यमानाः।

तत्त्वोपायप्रभृतिविषये स्वामिदत्तां स्वनिष्ठाम्
शेषां कृत्वा शिरसि कृतिनः शेषमायुर्नयन्ति ॥

शान्तमेव रसमेकं शरणयतो पुनरपि सम्प्रति रसान्तराण्यपि पुष्णातीव विष्णुभक्तिः । तथा हि----

जुगुप्सां देहादौ विषयरसभोगेषु हसनं
प्रकोपं निद्रादौ परपरुषवादादिषु भयम् ।
शुचं योगालाभे फलपरिणतौ विस्मयमपि
प्रयच्छत्युत्साहं दुरितविरतौ ब्रह्मणि रतिम् ॥

## दृश्यम् १३

(ततः प्रविशतः नारदतुम्बुरू)

नारदः — सखे ! चिरप्रार्थितमहासमरसंदर्शनेन सन्तोषितं चक्षुः तदिह भवता परिविवाहयिषितहर्षप्रकर्षेण विश्वेषु भुवनेषु विवेकविजयः विश्रावयितव्यः ।

तुम्बुरुः — यथाऽऽज्ञापयति !

नारदः — अहं तु प्रशमितप्रतिपक्षं स्ववशीकृतहृषीकगणं सुमतिसहायं महाराजं समयोपनतसार्वभौमपदाभिषेकं सौस्नातिकवृत्त्या सम्भाव्य, समाधिसप्ततन्तुसहायेन सन्तोषयितुमिच्छामि ।

विवेकः — अद्य खलु वयमनुगृहीताः स्मः । सञ्जीवनी खलु भवादृशां वागमृतवृत्तिः । भगवन् !

लुप्तदृष्टिभिरलब्धदेशिकैर्लोकवेदपदवी दुरत्यया ।
तत्प्रसीद भगवन् मदीप्सितं पुण्डरीकमिव पाहि मन्त्रतः

नारदः — यतिष्ये चाहं यथासारम्—

अधिकमिह मुमुक्षोरागमग्राह्यवर्गात्
स्वयमिह गुरुभक्त्या दर्शितं स्वानुभूतौ ।
प्रथयति मयि सौम्य त्वन्निदेशेन मन्ये
सपदि भवति लब्धे गाढलग्नस्समाधिः ॥

अप्रतिहतमनोरथः पुरुषमपवर्गे स्थापयेथाः ।

विवेकः — सेनापते! संप्रति सिद्धप्रायं समाधिमुत्पश्यामि ।

षडङ्गमथवाष्टाङ्गं समाधिमाधिरोक्ष्यतः ।
अवलम्बनमक्षुद्रा दयैका दानवद्रुहः ॥

तयैव गाढालिङ्गितोऽसौ पुरुषः इदानीमालक्ष्यते । इह हि

विषयमदिरामुग्धैस्त्यक्तस्स एष पृथग्जनैः
क्वचन समये यत्नैकाग्र्यं क्वचिच्च तदास्पदे ।
निभृतकरणग्रामस्तृप्यन् निरुद्धमरुद्गणः
परमिह परे धाम्नि प्रत्यङ्मुखः प्रतितिष्ठति ॥

तदहमपि यावत्पुरुषं कृतकृत्यं कृतार्थं च निर्धारयामि ।

अविकलबहुमत्या सेवितोऽहं सुमत्या
नियतिमनतिलङ्घ्यां निर्ममस्सान्त्वयामि ।
त्वरयितुमिह देवीं त्वन्मते विष्णुभक्तिं
गणयितुमपि सिद्धिं गच्छ सेनापते त्वम् ॥

व्यवसायः—यदाज्ञापयति देवः ।

## दृश्यम् १४

(ततः प्रविशति विष्णुभक्तिः)

अम्बा मे पुरुषस्य बुद्धिरनघा तातस्स धर्मोत्तरः
सन्तुष्टिस्सहजा क्षमा प्रियसखी सद्वृत्तिराज्ञाकरी।
विद्यैव स्वयमस्मि विश्ववृजिनप्रध्वंसनं क्रीडितं
साऽहं प्राणिमि विष्णुभक्तिरचला संतिष्ठते संसृतिः॥

निरुध्य तरसा मरुत्करणमण्डलीं कुण्डलीं
विचिन्त्य विगणय्य वा धमनिधातुमर्मादिकम्।
किमत्र निगमत्रयस्थितिमताऽपि वा लभ्यते
मयि स्थितिरवस्थिता यदि किमुच्यते मुच्यते॥

यश्चासौ निवृत्तिधर्मकाष्ठाभूतो नैश्रयसो योगः उच्यते सोऽपि मदनुरोधादेव महतीं सिद्धिमापादयति। अद्य च----

कामादिकेष्वपगतेषु कथावशेषं
सम्प्रत्यसौ शमदमादिगुणोपपन्नः।
मैत्रीदयादिपरिकर्मविभूषितेन
श्रद्धाधनेन मनसा लभते समाधिम्॥

ततश्च---

वैकुण्ठकृपया देव्या मदभीष्टे व्यवस्थितम् ।<br>
प्राध्वं सङ्कल्पमार्तण्डं प्रवर्तयितुमुत्सहे ॥

अतस्तामेव तावदापतिष्ठे । अद्य पुनः मातेव स्तनन्धयानामभिरक्षणे पक्षपातिनी भवती ।

फलवितरणदक्षं पक्षपातानभिज्ञं<br>
प्रगुणमनुविधेयं प्राप्य पद्मासहायम्<br>
महति गुणसमाजे मानपूर्वं दये त्वं<br>
प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥

(इति निष्क्रान्ता)

## दृश्यम् १५

(ततः प्रविशति संकल्पः)

आत्मानं निर्वर्ण्य

यस्मिन् विस्मयनीयभूमनि मनागुन्मीलितेनैकधा
सिध्यन्त्यस्य सिताऽसितस्य जगतः स्वर्गापवर्गोदयः ।
ऐशस्सोऽहमवासरात्ययभवन्मायामहायामिनी
सत्ताशेषसुषुप्तबोधनपटुः सङ्कल्पसूर्योदयः ॥

आदिष्टोऽस्मि देव्या भगवदनुकम्पया । यथा विवेकेन विनिष्पन्नसमाधिः पुरुषः त्वयैव मोचनीय इति । अद्य तु

अनिदंप्रथमां निद्रां विनिवर्त्य क्षणादहम् ।
अनिदंपश्चिमां पुंसो जनयिष्यामि जागराम् ॥

तदर्थमपि तावदिदमिदानीमाददीय । यदुत—

मयि विनिहितभारं मध्यमे वृत्तिभेदे
स्थिरमनसमुपायापायरथ्यानिवृत्तम् ।
मुरमथनसमीक्षाशेखरेण स्वभूम्ना
मुषितनिखिलदोषं मोचयिष्यामि जीवम् ॥

विष्णुभक्तिः--अहो देव! यदहमिदानीं भवतैव भावनीयं प्रहर्षपरवशा प्रत्यभिज्ञापयामि । अथ हि---

प्रकृतः क्रियया धिया च योगः परमैकान्त्यपरिष्कृतस्य पुंसः
निधिदर्शनवन्निरूढहर्षं प्रणिधत्ते विशदं परप्रकाशम् ॥

सङ्कल्पः — अहो महदिदमाश्चर्यम् ।

शृङ्गारवीरकरुणाद्भुतहास्यभीति-
बीभत्सरौद्रविषयानतिवर्तमानः ।
तत्त्वावलोकनविभावसमेधितात्मा
शान्तो रसः स्फुरति मूर्त इवैष धन्यः ॥

विष्णुभक्तिः--अयं तावदिदानीमान्तरस्य योगस्य परिपाकः बाह्यस्य चैतादृशीं दशामनुभवति पुरुषः ।

## दृश्यम् १६

(ततः प्रविशति पुरुषः)

पुरुषः — देव! भवत्प्रसादसंभवेयं पराङ्मुखस्वभावस्य मे प्रत्यङ्मुखी बुद्धिवृत्तिः।

क्रियाशक्तिं केचिद्दनुजमथनीं हेतिमपरे
मनस्तत्त्वं चान्ये मधुविजयिनस्त्वामभिदधुः।
तमेवैके तत्तत्पदविषयजुष्टं तदिह नः
सदोत्तुङ्गः प्रादुर्भवसि भवसिन्धुप्रमथनः॥

सङ्कल्पः — भद्र!

दहरकुहरे देवस्तिष्ठन्निषद्वरदीर्घिका
निपतितनिजापत्यादित्सावतीर्णपितृक्रमात्।
धमनिमिह नस्तस्मिन् काले स एव शताधिकाम्
अकृतकपुरःप्रस्थानार्थं प्रवेशयति प्रभुः॥

विवेकः — महायोगेश्वरि!

किं विज्ञानैः किं तपोदानयज्ञैः
किं वान्यैश्च त्वत्परित्यागदीनैः।

ज्ञातुं द्रष्टुं तत्त्वतश्च प्रवेष्टुं
शक्यं ब्रह्मानन्यभाजा त्वयैव ॥

भगवति! विश्वसाक्षात्कारविचक्षणायाः, किमेतावत् परिमितातिशयदर्शनमाश्चर्यम् ।

विष्णुभक्तिः--किञ्चिदचिन्त्यमहिमशालिनि अमुष्मिन्महात्मनि अद्भुतमवलोकयामि ।

कृतमिह दुरितं प्रमादवृत्त्या किमपि मुकुन्दकृपानिमग्नमेनम् ।
पवनतनयवालवह्निनीत्या न दहति धक्ष्यति योजितं परेषु ॥

भवत्वेतदेवं निष्प्रत्यूहभगवदनुकम्पावलम्बितः पुरुषः सर्वदोषाकरं संसारसागरं निस्तरति, प्रविशति च परमं पदम् । किं ते भूयः प्रियमुपहरामि ?

विवेकः — भगवति महानुभावे !

किं तत्प्रियं परमतः प्रतिपादनीयं
पद्मासहायपदपद्मजुषा भवत्या ।
पश्यामि मत्पुरुषमेवमपास्तपङ्कं
राकाशशाङ्कमिव राहुमुखाद्विमुक्तम् ॥

तथापीदमस्तु भरतवा ।

अङ्गीकुर्वन्त्वकलुषधियो नित्यमध्यात्मविद्याम्
आद्यो धर्मः स्पृशतु वसुधामाशिषः पारवर्ती ।
देवः श्रीमान् निरवधिदयासिन्धुरस्मिन् प्रबन्धे
वक्ता श्रोता वचनविषयः प्रीयतां वासुदेवः ॥

